एन्द्र सानसिम् (५) इत्यस्या ऋचः मधुच्छन्दा ऋषिः। साम्नोः रोहितकूलीययोः इन्द्र ऋषिः। विश्वामित्रो वा ॥ (ग्रा. गे. २१२-३) ॥ १२९ ॥

इन्द्रं वयं महाधन (६) इत्यृचः मधुच्छन्दा ऋषिः। साम्नोरिन्द्राण्याः इन्द्राणी ऋषिः ॥ (ग्रा. गे. २१४-५) ॥ १३० ॥

अपिबत् कद्रुव (७) इत्यृचः त्रिशोक ऋषिः। साम्नः सहस्रबाहवी- 5
यस्य इन्द्रः ऋषिः ॥ (ग्रा. गे. २१६) ॥ १३१ ॥

वयमिन्द्र त्वा यव (८) इत्यृचो वसिष्ठः ऋषिः। साम्नो धृषतो मारुतस्य धृषन्मरुद्दृषिः ॥ द्वितीयस्य भारद्वाजस्यादरसृतः भारद्वाज ऋषिः। तृतीयस्य धृषतो मारुतस्य धृषन्मरुद्दृषिः। चतुर्थपञ्चमयोः भरद्वाजस्यादरसृतो भरद्वाज ऋषिः ॥ (ग्रा. गे. २१७-२२१) ॥ १३२ ॥ 10

आ घा ये (९) इत्यृचः त्रिशोक ऋषिः। साम्नां त्रयाणाम् ऐध्मवाहानामिध्मवाह ऋषिः ॥ (ग्रा. गे. २२२-४) ॥ १३३ ॥

भिन्धि विश्वा अप द्विषः (१०) इत्यृचः त्रिशोक ऋषिः। साम्नोऽहेः पैङ्गस्य अहिः पैङ्ग ऋषिः ॥ (ग्रा. गे. २२५) ॥ १३४ ॥

॥ इति ऐन्द्रे द्वितीयेऽध्याये द्वितीयः खण्डः ॥ 15

## तृतीयः खण्डः

इहेव शृण्व एषाम् (१) इत्यस्या ऋचस्त्रिशोक ऋषिः। साम्नः [ऐषस्य] इषः [ऋषिः।] मरुतो देवता। गायत्री छन्दः ॥ (ग्रा. गे. २२६) ॥ १३५ ॥

इम उ त्वा वि चक्षते (२) इत्यृचः त्रिशोक ऋषिः। साम्नः 20
[पौषस्य] पूषा [ऋषिः।] मरुतो देवता ॥ (ग्रा. गे. २२७) ॥ १३६ ॥

---

3. B My L. °धनम् for °धनं

20. B My L. इमा for इम

**समस्य मन्यवे विशः** (३) इत्यृचः वत्स ऋषिः । साम्नः मरुतां संवेशीयस्य मरुतः ॥ (ग्रा. गे. २२८) ॥ १३७ ॥

**देवानामिदवो महत्** (४) इत्यृचः कुसीदी काण्वः ऋषिः । साम्नां चतुर्णामाद्ययोर्हविष्मान् परयोर्हविष्कृत् । विश्वेदेवा देवता ॥ (ग्रा. गे.
5 २२९-२३२) ॥ १३८ ॥

**सोमानां स्वरण** (५) इत्यृचः मेधातिथिः ऋषिः । साम्नः कक्षीवान् औशिज ऋषिः ब्रह्मणस्पतिर्देवता ॥ (ग्रा. गे. २३३) ॥ १३९ ॥

**बोधन्मना** (६) इत्यृचः श्रुतकक्ष ऋषिः । साम्न औषसस्य उषा ऋषिः ॥ (ग्रा. गे. २३४) ॥ १४० ॥

10 **अद्या नो देव सवितः** (७) इत्यृचः श्यावाश्वः ऋषिः । सविता देवता । साम्नोः भरद्वाजस्य मौक्षयोर्भरद्वाज ऋषिः ॥ (ग्रा. गे. २३५-६) ॥ १४१ ॥

**कस्य वृषभ** (८) इत्यृचः प्रगाथः काण्व ऋषिः । साम्नां भारद्वाजानां त्रयाणां भरद्वाजः [ऋषिः] ॥ (ग्रा. गे. २३७-९) ॥ १४२ ॥

15 **उपह्वरे गिरीणाम्** (९) इत्यृचः वत्सः ऋषिः । साम्नो शाकृत्यसाम्नोः शाकृत्य ऋषिः ॥ (ग्रा. गे. २४०-१) ॥ १४३ ॥

**प्र सम्राजं चर्षणीनाम्** (१०) इत्यृचः इरिमीढ ऋषिः । साम्नः चतुर्णाम् आद्ययोर्वार्षंघरयोर्वृषंधर ऋषिः । परयोः कुत्सस्य प्रस्तोकयोः कुत्स ऋषिः ॥ (ग्रा. गे. २४२-५) ॥ १४४ ॥

20 ॥ इति ऐन्द्रे द्वितीयेऽध्याये तृतीयः खण्डः ॥

---

1. B मन्वते for मन्यवे
8. B My L. °न्मन for °न्मना ; BMyL. साम्नो° for साम्नः
17. Sm. इरिंबिठिः for इरिमीढः

## चतुर्थः खण्डः

अपादु शिप्र्यन्धसः (१) इत्यृचः श्रुतकक्षः ऋषिः । साम्नोरौपगयोरुपगुः सौश्रवस ऋषिः ॥ (ग्रा. गे. २४६-७) ॥ १४५ ॥

इमा उ त्वा पुरूवसः (२) इत्यृचः भरद्वाज ऋषिः । साम्नः त्वाष्ट्रीसाम्नः त्वाष्ट्री ऋषिः । (ग्रा. गे. २४८) ॥ १४६ ॥ 5

अत्राह गोरमन्वत (३) इत्यृचः गौतम ऋषिः । साम्नोस्त्वष्टुरातिथ्ययोः त्वष्टा ऋषिः ॥ (ग्रा. गे. २४९-२५०) ॥ १४७ ॥

यदिन्द्रो अनयद्रितः (४) इत्यृचः भरद्वाज ऋषिः । साम्नोः पौषयोः पूषा ऋषिः । देवता च ॥ (ग्रा. गे. २५१-२) ॥ १४८ ॥

गौर्धयति मरुताम् (५) इत्यृचः बिन्दुः पूतदक्षो वा ऋषिः । साम्नोः 10 श्यावाश्वयोः श्यावाश्वः ऋषिः ॥ (ग्रा. गे. २५३-४) ॥ १४९ ॥

उप नो हरिभिः सुतम् (६) इत्यृचः श्रुतकक्ष ऋषिः । साम्नोः सुतंरयिष्ठीययोः सुतंरयिष्ठ ऋषिः ॥ (ग्रा. गे. २५५-६) ॥ १५० ॥

इष्टा होत्रा (७) इत्यृचः श्रुतकक्ष ऋषिः । साम्नः इष्टाहोत्रीयस्य अप्सरस ऋषिः ॥ (ग्रा. गे. २५७) ॥ १५१ ॥ 15

अहमिद्धि (८) इत्यृचः वत्स ऋषिः । साम्नो निधनकामस्य प्रजापतिः ऋषिः ॥ (ग्रा. गे. २५८) ॥ १५२ ॥

रेवतीर्णः सधमाद (९) इत्यृचः शुनःशेप ऋषिः । साम्नो रैवत्यस्य रैवत्य ऋषिः । वाजदावर्यो वा प्रजापतिः ऋषिः ॥ (ग्रा. गे. २५९) ॥१५३॥

सोमः पूषा (१०) इत्यृचः पूषा ऋषिः । सोमः पूषा [च] देवता । 20 साम्नः सौमापूषस्य सोमः पूषा च देवता (ऋषी ?) ॥ (ग्रा. गे. २६०) ॥ १५४ ॥

॥ इति ऐन्द्रे द्वितीयेऽध्याये चतुर्थः खण्डः ॥

---

13. सुतंरयिष्ठः See CN.

20. पूषा ऋषिः See CN.

## ॥ पञ्चमः खण्डः ॥

**पान्तमा वो अन्धसः** (१) इत्यृचः श्रुतकक्ष ऋषिः। साम्नां वैतहव्यानां वीतहव्य ऋषिः। ओकोनिधनं वा तृतीयं साम। अनुष्टुप् छन्दः। (ग्रा. गे. २६१-३) ॥ १५५ ॥

5 **प्र व इन्द्राय मादनम्** (२) इत्यृचः वसिष्ठ ऋषिः। साम्नां षण्णामाद्ये शाक्तिसामनी। तयोः शाकृत्य ऋषिः। तृतीयचतुर्थे गौरीविते। तयोर्गौरीवित ऋषिः। पञ्चमषष्ठयोः शाकृत्यः गौरीवितश्च ऋषिः॥ (ग्रा. गे. २६४-९) ॥ १५६ ॥

**वयमु त्वा तदिदर्था** (३) इत्यृचो मेधातिथिः प्रियमेधाश्च द्वावृषी। 10 साम्नोः काण्वयोः कण्व ऋषिः॥ (ग्रा. गे. २७०-१) ॥ १५७ ॥

**इन्द्राय मद्वने सुतम्** (४) इत्यृचः श्रुतकक्ष ऋषिः। साम्नः (म्नां ?) आद्ययोर्गौरीवित ऋषिः। तृतीय[स्य] श्रौतकक्षस्य श्रुतकक्ष ऋषिः॥ (ग्रा. गे. २७२-४) ॥ १५८ ॥

**अयं त इन्द्र सोमः** (५) इत्यृचः इरिमीढ ऋषिः। साम्नामाद्ययोः 15 सौमित्रयोः सुमित्र ऋषिः। तृतीयस्य इहवद्दैवोदासस्य दिवोदास ऋषिः॥ (ग्रा. गे. २७५-७) ॥ १५९ ॥

**सुरूपकृत्नुमूतये** (६) इत्यृचः मधुच्छन्दा ऋषिः। साम्नां चतुर्णामाद्यं शाकरवर्णम्। शाकर[वर्ण] ऋषिः। द्वितीयं रैणवम्। रेणुः ऋषिः। तृतीयचतुर्थे औदले। उदलो वैश्वामित्र ऋषिः॥ (ग्रा. गे. २७८-२८१) 20 ॥ १६० ॥

**अभि त्वा वृषभा सुते** (७) इत्यृचः त्रिशोक ऋषिः। साम्नां त्रयाणाम् आर्षभाणाम् ऋषभ ऋषिः॥ (ग्रा. गे. २८२-४) ॥ १६१ ॥

---

14. Sm. इरिम्बिठिः for इरिमीढः

य इन्द्र चमसेषु (८) इत्यृचः कुसीतिः (दिः ?) [ऋषिः]। साम्नोः
तयोः कुत्सः [ऋषिः]॥ (ग्रा. गे. २८५-६) ॥ १६२ ॥

योगेयोगे तवस्तरम् (९) इत्यृचः शुनःशेपः ऋषिः। साम्नां सौमे-
नां त्रयाणां सुमेधा ऋषिः ॥ (ग्रा. गे. २८७-९) ॥ १६३ ॥

आ त्वेता नि षीदत (१०) इत्यृचः मधुच्छन्दाः [ऋषिः]। साम्नो 5
त्तिथस्य दै(दे ?)वातिथिः काण्वः ऋषिः (ग्रा. गे. २९०) ॥ १६४ ॥

॥ इति ऐन्द्रे द्वितीयेध्याये पञ्चमः खण्डः ॥

---

॥ षष्ठः खण्डः ॥

इदं ह्यन्वोजसा (१) इत्यृचः विश्वामित्रः [ऋषिः]। आङ्गिरसानि त्रीणि
ानि। तेषामङ्गिरा ऋषिः। माधुच्छन्दसं वा प्रथमम्; क्रौञ्चं द्वितीयम्; 10
ह्नुन्निधनं तृतीयं वा ॥ (ग्रा. गे. २९१-३) ॥ १६५ ॥

महाँ इन्द्रः पुरश्च न (२) इत्यृचः मधुच्छन्दा ऋषिः। सामानि
णा वाम्राणि वा प्रि(प्रै ?)यमेधानि वा। प्रियमेधा ऋषिः॥ (ग्रा. गे.
९४-६) ॥ १६६ ॥

आ तू न [इन्द्र] क्षुमन्तम् (३) इत्यृचः कुसीद ऋषिः। साम्नां 15
र्णामाद्ये गौरीविते। तयोर्गौरीवितः शाक्त्य ऋषिः। तृतीयचतुर्थे
कूपारे। तयोराकूपारयोराङ्गिरस ऋषिः॥ (ग्रा. गे. २९७-३००)
१६७ ॥

अभि प्र गोपतिं गिरा (४) इत्यृचः प्रियमेधः अभिप्रपाच्य ऋषिः।
त्रां त्रयाणाम् आद्ये धुरोः सामनी। गौरीवितं तृतीयम्। प्रथमद्वितीययोर्धुर 20
षिः। गौरीवितस्य शाक्त्य ऋषिस्तृतीयस्य॥ (ग्रा. गे. ३०१-३०३)
१६८ ॥

---

15. Sm. कुसीदी for कुसीदः; L. om. कुसीद........इत्यृचः L. 19.
19 अभिप्रायच्य: See CN.

4

**कया नश्चित्र आ भुवत्** (५) इत्यृचो वामदेव ऋषिः। साम्नामा
वाचःसामनी। वामदेव्यं तृतीयम्। आद्ययोर्वागृषिः। तृतीयस्य वामदे
ऋषिः॥ (ग्रा. गे. ३०४-६)॥ १६९॥

**त्यमु वः सत्रासाहम्** (६) इत्यृचः श्रुतकक्षः ऋषिः। साम्नो
5 सत्रासाहीययोरिन्द्र ऋषिः॥ (ग्रा. गे. ३०७-८)॥ १७०॥

**सदसस्पतिमद्भुतम्** (७) इत्यृचः मेधातिथिः ऋषिः। साम्नो वाम
देव्यस्य वामदेव ऋषिः॥ (ग्रा. गे. ३०९)॥ १७१॥

**ये ते पन्था अधो दिवः** (८) इत्यृचः वामदेव ऋषिः। अश्विनोः
साम्नः अश्विनावृषी॥ (ग्रा. गे. ३१०)॥ १७२॥

10 **भद्रं भद्रं न आ भर** (९) इत्यृचः श्रुतकक्ष ऋषिः। साम्नो गौतमस्य
भद्रस्य गौतम ऋषिः॥ (ग्रा. गे. ३११)॥ १७३॥

**अस्ति सोमो अयं सुतः** (१०) इत्यृचः बिन्दुः पूतदक्षो वा ऋषिः
साम्नोऽश्विनोः अश्विनावृषी॥ (ग्रा. गे. ३१२)॥ १७४॥

॥ इति ऐन्द्रे द्वितीयेऽध्याये षष्ठः खण्डः॥

15 ॥ सप्तमः खण्डः॥

**ईङ्खयन्तीरपस्युवः** (१) इत्यृचः इन्द्रमातरो देवजामय ऋषयः।
साम्नः त्वाष्ट्रीसाम्नः त्वाष्ट्रीय ऋषिः॥ (ग्रा. गे. ३१३)॥ १७५॥

**नकि देवा** (२) इत्यृचः गोधा ऋषिः। साम्नश्च गोधा॥ (ग्रा.
गे. ३१४)॥ १७६॥

---

2. B My. Om. आद्ययोर्वागृषिः
8. B My L. एते for ये ते
14. My LB. अनुवाकः for खण्डः
16. My LB. °जातयः for °जामयः
17. Sm. त्वष्टा for त्वष्ट्रीयः
18. My LB. गोधाः for गोधा

दोषो आगाद् बृहद् (३) इत्यृचः दध्यङ्ङाथर्वण ऋषिः। साम्नः
ॅवितुः साम्नः सविता ऋषिः। देवता च॥ (ग्रा. गे. ३१५) ॥ १७७॥

एषो उषा अपूर्व्या (४) इत्यृचः प्रस्कण्व ऋषिः। साम्नः औषसस्य
वा ऋषिः। सविता देवता॥ (ग्रा. गे. ३१६) ॥ १७८॥

इन्द्रो दधीचो अस्थभिः (५) इत्यृचः गौतम ऋषिः। साम्नोस्त्वष्टु- 5
त्तिथ्ययोः त्वष्टा ऋषिः॥ (ग्रा. गे. ३१७-८) ॥ १७९॥

इन्द्रेहि मत्स्यन्धसः (६) इत्यृचः मधुच्छन्दा ऋषिः। साम्नः
षास्य पूषा ऋषिः॥ (ग्रा. गे. ३१९) ॥ १८०॥

आ तू न इन्द्र वृत्रहन् (७) इत्यृचः वामदेवः ऋषिः। साम्नः
द्रास्य मायाया इन्द्रः [ऋषिः] ॥ (ग्रा. गे. ३२०) ॥ १८१॥ 10

ओजसस्तदस्य तित्विषः (८) इत्यृचः वत्स ऋषिः। साम्नोरिन्द्रस्य
वार्तयोरिन्द्र ऋषिः। संवर्तो आङ्गिरसः॥ (ग्रा. गे. ३२१-२) ॥ १८२॥

अयमु ते समतसि (९) इत्यृचः शुनःशेप ऋषिः। साम्नः शौनः-
नस्यापि शुनःशेपः ऋषिः॥ (ग्रा. गे ३२३) ॥ १८३॥

वात आ वातु भेषजम् (१०) इत्यृचः वातायन उलः [ऋषिः]। वायुः 15
ता। साम्नः प्रतीचीनेडंकाशीतस्य काशीत ऋषिः॥ (ग्रा. गे. ३२४) ॥
८४॥

॥ इति ऐन्द्रे द्वितीयेऽध्याये सप्तमः खण्डः॥

## ॥ अष्टमः खण्डः॥

यं रक्षन्ति प्रचेतसः (१) इत्यृचः कण्व ऋषिः। मित्रावरुणमुख्या 20
ादित्या देवताः। साम्नः सौमित्रस्य सुमित्र ऋषिः॥ (ग्रा. गे ३२५) ॥
१८५॥

1. My LB. दध्यनकिद्दाथर्वणः for दध्यङ्ङाथर्वणः See CN.
12. My LL. सां (सु° L.) वर्तोराङ्गिरसः for संवर्तो आङ्गिरसः See C.N.

गव्यो षु णो यथा पुरा (२) इत्यृचः वंश ऋषिः । साम्नोः श्या वाश्वयोः श्यावाश्व ऋषिः ॥ (ग्रा. गे. ३२६-७) ॥ १८६ ॥

इमास्त इन्द्र पृश्नयः (३) इत्यृचः वत्सः ऋषिः । साम्नः शैखण्डिनस्य शिखण्डी ऋषिः ॥ (ग्रा. गे. ३२८) ॥ १८७ ॥

5 अया धिया च गव्यया (४) इत्यृचः श्रुतकक्ष ऋषिः । साम्नो वैतहव्यस्य वीतहव्य ऋषिः ॥ (ग्रा. गे. ३२९) ॥ १८८ ॥

पावका नः सरस्वती (५) इत्यृचः मधुच्छन्दा ऋषिः । सरस्वती देवता । साम्नो भारद्वाजस्य भरद्वाज ऋषिः ॥ (ग्रा. गे. ३३०) ॥ १८९ ॥

क इमं नाहुषीषु (६) इत्यृचः वामदेव ऋषिः । साम्न आरुणस्य 10 वैतहव्यस्य अरुणो वीतहव्य ऋषिः ॥ (ग्रा. गे. ३३१) ॥ १९० ॥

आ याहि सुषुमा हि ते (७) इत्यृचः इरिमीढ ऋषिः । साम्नः सौभरस्य सुभरिः ऋषिः ॥ (ग्रा. गे. ३३२) ॥ १९१ ॥

महि त्रीणामवरस्तु (८) इत्यृचः वारुणिः सत्यधृतिः [ऋषिः] । मित्रावरुणौ देवता । साम्नोः पाष्ठौहयोः पष्ठवाह ऋषिः ॥ (ग्रा. गे. ३३३-४) 15 ॥ १९२ ॥

त्वावतः पुरूवसो (९) इत्यृचः वंश ऋषिः । साम्नो धुरांसाकमश्वस्य साकमश्वः [ऋषिः] ॥ (ग्रा. गे. ३३५) ॥ १९३ ॥

इति ऐन्द्रे द्वितीयेऽध्याये अष्टमः खण्डः ॥

## ॥ नवमः खण्डः ॥

20 उस्रा मन्दन्तु सोमाः (१) इत्यृचः गाध ऋषिः । साम्नो यामस्य यमः [ऋषिः] ॥ (ग्रा. गे. ३३६) ॥ १९४ ॥

---

1. B My L. पुरम् for पुरा ; MyB. वाशः for वंशः
11. Sm. इरिम्बिठिः for इरिमीढः
13. My B. L. वारुणी for वारुणिः
20. Sm. प्रगाथः for गाधः

गिर्वणः पाहि नः सुतम् (२) इत्यृचः विश्वामित्र ऋषिः। साम्न
ङ्गिरसस्य हरिश्रीनिधनस्य अङ्गिरा ऋषिः॥ (ग्रा. गे. ३३७)॥ १९५॥

सदा व इन्द्रः (३) इत्यृचः वामदेव ऋषिः। साम्नो वैरूपस्य
रूपाङ्गिरस ऋषिः॥ (ग्रा. गे. ३३८)॥ १९६॥

आ त्वा विशन्त्विन्दवः (४) इत्यृचः श्रुतकक्षः ऋषिः। साम्नः 5
न्धुषाम्नः असितः ऋषिः॥ (ग्रा. गे. ३३९)॥ १९७॥

इन्द्रमिद्गाथिनो बृहत् (५) इत्यस्य[ा] ऋचः मधुच्छन्दा ऋषिः।
ाम्नोऽर्कस्य यम ऋषिः॥ (ग्रा. गे. ३४०)॥ १९८॥

इन्द्र इषे ददातु न (६) इत्यृचः श्रुतकक्षः ऋषिः। साम्नोः
ौमित्रयोः सुमित्रः [ऋषिः]॥ (ग्रा. गे. ३४१·२)॥ १९९॥ 10

इन्द्रो [अङ्ग] महद्भयम् (७) इत्यृचः गृत्समदः ऋषिः। साम्नः
भयंकरस्य इन्द्र ऋषिः॥ (ग्रा. गे. ३४३)॥ २००॥

इमा उ त्वा सुतेसुते (८) इत्यृचः भरद्वाज ऋषिः। साम्नस्त्वाष्ट्री-
ाम्नस्त्वष्टा ऋषिः॥ (ग्रा. गे. ३४४)॥ २०१॥

इन्द्रा नु पूषणा वयम् (९) इत्यृचः [भरद्वाजः ऋषिः।] इन्द्रापूषणौ 15
वत्ते। साम्नः पौषस्य पूषा ऋषिः॥ (ग्रा. गे. ३४५)॥ २०२॥

न कि इन्द्र त्वम् (दू!) (१०) इत्यृचः वामदेव ऋषिः। साम्न
न्द्राण्याः साम्नः इन्द्राणी ऋषिः॥ (ग्रा. गे. ३४६)॥ २०३॥

इत्यैन्द्रे द्वितीयेऽध्याये नवमः खण्डः

---

6. B. सिन्धुषामाध्यसितः। My सजुषाम्नासितः L. सिन्धुषाकौष्यसितः for सिन्धुषाम्नः असितः
10. B. My सुमित्रौ, L. सुमित्रसि for सुमित्र ऋषिः
15. LMy उ for नु

## दशमः खण्डः

**तरणिं वो जनानाम्** (१) इत्यृचः त्रिशोक ऋषिः। साम्नः श्यावाश्वस्य श्यावाश्व ऋषिः ॥ (ग्रा. गे. ३४७) ॥ २०४ ॥

**असृग्रमिन्द्र ते गिरः** (२) इत्यृचः मधुच्छन्दा ऋषिः। साम्नो
5 वैरूपस्य विरूप ऋषिः ॥ (ग्रा. गे. ३४८) ॥ २०५ ॥

**सुनीथो घा स मर्त्यो** (३) इत्यृचः वंशः ऋषिः। साम्नः सौमित्रस्य सुमित्रः ऋषिः ॥ (ग्रा. गे. ३४९) ॥ २०६ ॥

**यद्वीडाविन्द्र** (४) इत्यृचः त्रिशोक ऋषिः। साम्नस्तौभस्य तुभः ऋषिः। (ग्रा. गे. ३५०) ॥ २०७ ॥

10 **श्रुतं वो वृत्रहन्तमम्** (५) इत्यृचः श्रुतकक्षः[ऋषिः]। साम्नः श्रौतस्य श्रुतः ऋषिः ॥ (ग्रा. गे. ३५१) ॥ २०८ ॥

**अरं त इन्द्र श्रवसे** (६) इत्यृचः श्रुतकक्षः (वामदेवः ?) ऋषिः। साम्न आभीशवस्य अभीशवः ऋषिः ॥ (ग्रा. गे. ३५२) ॥ २०९ ॥

**धानावन्तं करम्भिणम्** (७) इत्यृचः विश्वामित्रः ऋषिः। साम्नः
15 पौषस्य पूषा ऋषिः ॥ (ग्रा. गे. ३७३) ॥ २१० ॥

**अपां फेनेन** (८) इत्यृचः गौषूक्ताश्वसूक्तिनौ [ऋषी]। साम्नः क्षुरपविणः इन्द्रः ऋषिः ॥ (ग्रा. गे. ३५४) ॥ २११ ॥

**इमे त इन्द्र सोमाः** (९) इत्यृचः वामदेवः [ऋषिः]। साम्नः सौमित्रस्य सुमित्र ऋषिः ॥ (ग्रा. गे. ३५५) ॥ २१२ ॥

---

6. Sm. वत्सः for वंशः
10. Sm. सुकक्षः for श्रुतकक्षः
12. श्रुतकक्षः See CN.
16. Sm. गोषूक्ता° for गौषूक्ता°

तुभ्यं सुतासः सोमाः (१०) इत्यृचः श्रुतकक्षः ऋषिः। साम्नः सौमित्रस्य सुमित्रः [ऋषिः] ॥ (ग्रा. गे. ३५६) ॥ २१३ ॥

इति ऐन्द्रे द्वितीयेऽध्याये दशमः खण्डः

---

## एकादशः खण्डः

आ व इन्द्रं क्रिविं यथा (१) इत्यृचः शुनःशेपः ऋषिः। साम्नः कौत्सस्य कुत्स ऋषिः ॥ (ग्रा. गे. ३५७) ॥ २१४ ॥ 5

अतश्चिदिन्द्र न उपा याहि (२) इत्यृचः श्रुतकक्षः ऋषिः। साम्नः कौत्सस्य कुत्सः ऋषिः ॥ (ग्रा. गे. ३५८) ॥ २१५ ॥

आ बुन्दं वृत्रहा (३) इत्यृचः त्रिशोकः ऋषिः। साम्न औषसस्य उषा ऋषिः ॥ (ग्रा. गे. ३५९) ॥ २१६ ॥ 10

बृहदुक्थं हवामहे (४) इत्यृचः मेधातिथिः ऋषिः। साम्नः भारद्वाजस्य भरद्वाजः [ऋषिः] ॥ (ग्रा. गे. ३६०) ॥ २१७ ॥

ऋजुनीती नो वरुणः (५) इत्यृचः गौतमः ऋषिः। [साम्नः] कौत्सस्य कुत्सः ऋषिः ॥ (ग्रा. गे. ३६१) ॥ २१८ ॥

दूरादिहेव यत्सतः (६) इत्यृचः ब्रह्मातिथिः ऋषिः। साम्नः औषसस्य उषा ऋषिः ॥ (ग्रा. गे. ३६२) ॥ २१९ ॥ 15

आ नो मित्रावरुणा (७) इत्यृचः विश्वामित्रो जमदग्निर्वा ऋषिः। साम्नो मित्रावरुण[योः सं]योजनस्य मित्रावरुणौ ऋषी ॥ (ग्रा. गे. ३६३) ॥ २२० ॥

उदु त्ये सूनवो गिरः (८) इत्यृचः प्रस्कण्वः काण्वः [ऋषिः]। साम्नो ऋतुषाम्णो ऋतव ऋषिः (०षयः?)॥ (ग्रा. गे. ३६४) ॥ २२१ ॥ 20

---

20. MyBL. विश्वामित्रो जमदग्निर्वा for प्रस्कण्वः काण्वः See CN.

**इदं विष्णुर्वि चक्रमे** (९) इत्यृचः मेधातिथिः ऋषिः। साम्नो विष्णोः साम्नः विष्णुः ऋषिः। देवता च ॥ (ग्रा. गे. ३६५) ॥ २२२ ॥

इति ऐन्द्रे द्वितीयेऽध्याये एकादशः खण्डः

---

## द्वादशः खण्डः

5 **अतीहि मन्युषाविणम्** (१) इत्यृचः मेधातिथिः ऋषिः। साम्नः कौत्सस्य कुत्सः ऋषिः ॥ (ग्रा. गे. ३६६) ॥ २२३ ॥

**कदु प्रचेतसे** (२) इत्यृचः वामदेव ऋषिः। साम्नः काश्यपस्य कश्यप ऋषिः ॥ (ग्रा. गे. ३६७) ॥ २२४ ॥

**उक्थं च न शस्यमानम्** (३) इत्यृचः मेधातिथिप्रियमेधौ [ऋषी]।
10 साम्नो बार्हदुक्थस्य बृहदुक्थो वाग्नेयः ॥ (ग्रा. गे. ३६८) ॥ २२५ ॥

**इन्द्र उक्थेभिः** (४) इत्यृचः विश्वामित्र ऋषिः। साम्नो बार्हदुक्थस्य बृहदुक्थो वाग्नेयः ॥ (ग्रा. गे. ३६९) ॥ २२६ ॥

**आ याह्युप न[ःसुत]म्** (५) इत्यृचः मेधातिथिराङ्गिरसः प्रियमेधः ऋषिः। साम्नः कौत्सस्य कुत्सः ऋषिः ॥ (ग्रा. गे. ३७०) ॥ २२७ ॥

15 **कदा वसो स्तोत्रम्** (६) इत्यृचः दुर्मित्रः ऋषिः। साम्नोः कौत्सयोः कुत्स ऋषिः ॥ (ग्रा. गे. ३७१-२) ॥ २२८ ॥

**ब्राह्मणादिन्द्र राधसः** (७) इत्यृचः मेधातिथिः ऋषिः। साम्नः और्ध्वसद्मनस्य ऊर्ध्वसद्मा ऋषिः ॥ (ग्रा. गे. ३७३) ॥ २२९ ॥

---

9. B My ins. ऋषि. after मेधातिथि°
10. B My बृहदुक्थस्य for बार्हदुक्थस्य
13. B My L. °मेधा for मेधः.
14. B My L. बार्हदुक्थस्य बृहदुक्थः for कौत्सस्य कुत्सः See CN.
18. B My L. कौत्सस्य कुत्सः for और्ध्वसद्मनस्य ऊर्ध्वसद्मा. See CN.

**वयं घा ते अपि स्मसि** (८) इत्यृचः मेधातिथिः ऋषिः। साम्नः ऊर्ध्वसद्मनस्य ऊर्ध्वसद्मा ऋषिः ॥ (ग्रा. गे. ३७४)॥ २३० ॥

**एन्द्र पृक्षु कासु [चिन्नृम्ण]म्** (९) इत्यृचः [विश्वामित्र ऋषिः]। साम्नः औदलस्य अभीपाद उदल ऋषिः ॥ (ग्रा. गे. ३७५) ॥ २३१ ॥

**एवा ह्यसि वीरयुः** (१०) इत्यृचः मधुच्छन्दा ऋषिः। आमहीयवस्य 5 आमहीयुः ऋषिः ॥ (ग्रा. गे. ३७६) ॥ २३२ ॥

इत्यैन्द्रे द्वितीयेऽध्याये द्वादशः खण्डः

एवमैन्द्रयस्तु गायत्र्यः शतमष्टादशाधिकम्।
षडशीतिशतं (!) साम्नामाम्नातानि महर्षिभिः ॥

॥ इति द्वितीयोऽध्यायः ॥ 10

## तृतीयोऽध्यायः

अथैन्द्रयो बृहत्योऽनुवाकाष्टकैराम्नाताः। त्रिभिस्त्रिष्टुभ्यः एकेनानुष्टु स्तृतीयाध्याये आम्नाताः ॥

### प्रथमः खण्डः

5 **अभि त्वा शूर नोनुमः** (१) इत्यृचः वसिष्ठ ऋषिः। इन् देवता। बृहती छन्दः। एवमुत्तरत्र। आसामपि एकोनसप्ततिसंख्याकऋचा बृहती छन्दः। इन्द्रो देवता। अन्यासामेकादशर्चां देवताविशेषस्तत्र वक्ष्यते। साम्नोर्भरद्वाजस्यार्कयोः भरद्वाजः ऋषिः॥ (ग्रा. गे. ३७७-८) ॥ २३३ ॥

**त्वामिद्धि हवामहे** (२) इत्यृचो भरद्वाज ऋषिः। तत्साम्नोर्भार-
10 द्वाजयोश्च भरद्वाज ऋषिः॥ (ग्रा. गे. ३७९-३८०॥ २३४ ॥

**अभि प्र वः सुराधसम्** (३) इत्यृचः बालखिल्या ऋषयः। साम्नामाद्ययोः सांनतयोः संनतिः ऋषिः। तृतीयस्य श्यैतस्य प्रजापतिः ऋषिः॥ (ग्रा. गे. ३८१-३) ॥ २३५ ॥

**तं वो दस्ममृतीषहम्** (४) इत्यृचः नोधा ऋषिः। साम्नां पञ्चाना-
15 माद्यस्य नाकस्य नाविक ऋषिः। द्वितीयस्याभीवर्तस्य प्रजापतिः ऋषिः। तृतीयस्य भागस्य भग ऋषिः। चतुर्थस्य इन्द्रस्याभीवर्तस्य इन्द्रः ऋषिः। पञ्चमस्य नौध[स]स्य नोधा[:] काक्षीवतः ऋषिः॥ (ग्रा. गे. ३८४-८) ॥ २३६ ॥

**तरोभिर्वो विदद्वसुम्** (५) इत्यृचः कलिः प्रगाथः ऋषिः। साम्नां
20 सप्तानामाद्ययोर्लौशयोर्लुशः ऋषिः। द्वितीयतृतीययोः (तृतीयचतुर्थयोः)

---

2. My त्रैष्टुभः for त्रैष्टुभ्यः. See CN ;My BL. एकोना° for एकेना°.

11. Sm. प्रस्कण्वः काण्वः for बालखिल्याः

15. नाकस्य. See CN.

20. My श्लौषयोः श्लुषः for लौशयोः लुशः

नाकयोः धन[ा]कः ऋषिः। [पक्षान्तरे] चतुर्थस्य क्षुल्लककालेयस्य क्षुल्लक-
लिः ऋषिः। [पञ्चम-] षष्ठसप्तमयोः (°सप्तमानां ?) कालेययोः (कालेयानां ?)
लिः ऋषिः। पक्षान्तरे सर्वेषां सप्तानां कलिरेव वा ऋषिः ॥ (ग्रा. गे.
८९-३९५) ॥ २३७ ॥

तरणिरित्सिषासति (६) इत्यृचो वसिष्ठः ऋषिः। साम्नां चतुर्णामा-
द्योरैषिरयोरिषिर ऋषिः। परयोर्गौश्रृङ्गयोर्गोश्रृङ्गः ऋषिः ॥ (ग्रा. गे.
९६-९) ॥ २३८ ॥

पिबा सुतस्य रसिनः (७) इत्यृचो मेधातिथिः ऋषिः। साम्ना-
द्यस्य पृष्ठस्य प्राजापत्यः ऋषिः। द्वितीयस्य शौल्कस्य शुल्कः ऋषिः।
तीयस्य जमदग्नेरभीवर्तस्य जमदग्निः ऋषिः ॥ (ग्रा. गे. ४००-२) ॥ २३९ ॥ 10

त्वं ह्येहि चेरवे (८) इत्यृचो भगः ऋषिः। साम्नोः कौल्मलबर्हिषयोः
ल्मलबर्हिः ऋषिः ॥ (ग्रा. गे. ४०३-४) ॥ २४० ॥

न हि वश्चरमं च न (९) इत्यृचो वसिष्ठः ऋषिः। मरुतो देवता।
म्नोर्वसिष्ठस्य जनित्रयोः वसिष्ठः ऋषिः ॥ (ग्रा. गे. ४०५-६) ॥ २४१ ॥

मा चिदन्यद्वि शंसत (१०) इत्यृचः प्रगाथः काण्वः ऋषिः। 15
म्नो मैधातिथस्य मेधातिथिः काण्वः ऋषिः ॥ (ग्रा. गे. ४०७) ॥ २४२ ॥

॥ इत्यैन्द्रे तृतीयेऽध्याये प्रथमः खण्डः ॥ १ ॥

## द्वितीयः खण्डः

नकिष्टं कर्मणा नशत् (१) इत्यृचः पुरुहन्मा ऋषिः। साम्नो
नासस्य [आद्यस्य] विखनाः, द्वितीयस्य पौरुहन्मनस्य पुरुहन्मा ऋषिः ॥ 20
गे. ४०८-९) ॥ २४३ ॥

---

6. My BL. इषिरजः for इषिरः
9. Sm, पृष्ठः for प्राजापत्यः Sm. शौक्लः ; शुक्लः for शौल्कस्य शुल्कः
3. My BL. trans. मरुतो देवता after ऋषिः।
6. LB. काण्व्यः for काण्वः

**य ऋते चिदभिश्रिषः** (२) इत्यृचो मेधातिथिः [ऋषिः]। साम्नः सात्यस्य सत्यः ऋषिः ॥ (ग्रा. गे. ४१०) ॥ २४४ ॥

**आ त्वा सहस्रमा शतम्** (३) इत्यृचो मेधातिथिः मेध्यातिथिः[र्वा] ऋषिः (षी ?)। साम्नां चतुर्णां भारद्वाजानां भरद्वाजः ऋषिः। अथ
5 द्वितीयस्य कण्वबृहतः कण्वः ऋषिः ॥ (ग्रा. गे. ४११-४) ॥ २४५॥

**आ मन्द्रैरिन्द्र हरिभिः** (४) इत्यृचो विश्वामित्रः ऋषिः। साम्नां वाम्राणां त्रयाणां वाम्रः ऋषिः॥ (ग्रा. गे. ४१५-७) ॥ २४६ ॥

**त्वमङ्ग प्र शंसिषः** (५) इत्यृचः रहूगणपुत्रो गौतमः ऋषिः। साम्नोऽग्नेर्गौङ्गवस्य अग्निर्गुङ्गुः ऋषिः। गुङ्गुर्वा॥ (ग्रा. गे. ४१८) ॥ २४७ ॥

10 **त्वमिन्द्र यशा असि** (६) इत्यृचः नृमेधः पुरुमेधो वा ऋषिः। साम्नोः (°म्नां?) इन्द्रस्य यशसोः (°साम् ?) [पञ्चानाम्] इन्द्रः ऋषिः। द्वितीयं साध्रं वा। [तस्य] साध्रः ऋषिः॥ (ग्रा. गे. ४१९-२३) ॥ २४८ ॥

**इन्द्रमिद्देवतातयः** (७) इत्यृचः मेधातिथिः ऋषिः। साम्नो यौक्त-स्रुचस्य युक्तस्रुचः ऋषिः॥ (ग्रा. गे. ४२४)॥ २४९ ॥

15 **इमा उ त्वा पूरूवसः** (८) इत्यृचः मेधातिथिः ऋषिः। साम्नां त्रयाणामात्राणामत्रिः ऋषिः॥ (ग्रा. गे. ४२५-७)॥ २५० ॥

**उदु त्ये मधुमत्तम** (९) इत्यृचो मेध्यातिथिः ऋषिः। साम्नां वासिष्ठानां त्रयाणां वसिष्ठः ऋषिः॥ (ग्रा. गे. ४२८-३०) ॥ २५१ ॥

---

7. Sm. वम्रः for वाम्रः
8. B My L. रभूगण° for रहूगण°.
10. In Sm. both नृमेध and पुरुमेध are the ṛṣis of this verse; साम्नोः See CN.

यथा गौरो अपा कृतम् (१०) इत्यृचो देवातिथिः काण्व ऋषिः । साम्नोर्गौतमस्य मनाद्ययोः गौतमः ऋषिः (ग्रा. गे. ४३१-२) ॥ २५२ ॥

इत्यैन्द्रे तृतीयेऽध्याये द्वितीयः खण्डः ॥ २ ॥

---

## तृतीयः खण्डः

शग्ध्यूषु शचीपते (१) इत्यृचो भर्गः ऋषिः । साम्नां त्रयाणां हारायणानाम् इन्द्रः ऋषि ॥ (ग्रा. गे. ४३३-५) ॥ २५३ ॥ 5

या इन्द्र भुज आभरः (२) इत्यृचो रेभः काश्यपः ऋषिः । साम्नां वाभ्राणां त्रयाणां बाभ्रः ऋषिः ॥ (ग्रा. गे. ४३६-८) ॥ २५४ ॥

प्र मित्राय प्रार्यम्णे (३) इत्यृचो जमदग्निः ऋषिः । आदित्यो देवता । साम्नां वरुणसाम्नां त्रयाणां वरुणः ऋषिः (ग्रा. गे. ४३९-४४१) 10 ॥ २५५ ॥

अभि त्वा पूर्वपीतये (४) इत्यृचो मेध्यातिथिः ऋषिः । साम्नो वषट्कारणिधनस्य प्रजापतिः ऋषिः ॥ (ग्रा. गे. ४४२) ॥ २५६ ॥

प्र व इन्द्राय बृहते (५) इत्यृचः नृमेधपुरुमेधावृषी। धृषतो मारुतस्य साम (म्नः?) धृषन्मारुतः ऋषिः ॥ (ग्रा. गे. ४४३) ॥ २५७ ॥ 15

साम्नां संशानानां चतुर्णामिन्द्रः ऋषिः। अथास्यामृचि **सन्त्वाहिन्वन्ति, सन्त्वाऋणन्ति, सन्त्वा ततक्षुः सन्त्वा शिशन्ति** इति चतुर्भिः स्तोभैः बृहदिन्द्राय गायत (६) इति चतुर्भिः पादैः चत्वार्यपि गेयानि । आदितस्त्रयस्तोभाः सामान्तिमाः[त्रयश्च] गीताः (गेयाः?) चतुर्थ (र्थः) सामाद्य-

---

2. Sm. मनाज्ययोः for मनाद्ययोः
12. Sm. मेधातिथिः for मेध्यातिथिः
16. BMyL. अप्यस्याम् for अथास्याम् See CN.
17. My ततष्टुः, L. ततक्षाः for ततक्षुः; L. चतुर्थं for चतुर्भिः
19. सामान्तिमाः See CN.

[न्त]स्तोभाः (भः?) । उभयविधस्तोभोऽपि चतुर्षु सामसु गेयः ॥ (ग्रा. गे. ४४४-५) ॥२५८॥

**इन्द्र क्रतुं न आभर** (७) इत्यृचः वसिष्ठः ऋषिः । साम्नां त्रयाणा आद्ये वाम्रे । वासिष्ठं तृतीयम् ॥ वाम्रवासिष्ठावृषी ॥ (ग्रा. गे. ४४६-८) ५ २५९ ॥

**मा न इन्द्र परा वृणक्** (८) इत्यृचः रेभः ऋषिः । साम्नोराजि गयोराजिगो दानवः ऋषिः ॥ (ग्रा. गे, ४४९-५०) ॥ २६० ॥

**वयं घ त्वा सुतावन्तः** (९) इत्यृचः मेध्यातिथिः ऋषिः । साम्नां चतुर्णामाद्यम् आष्कारणिधनं काण्वम् । अस्य काण्वस्य कण्व ऋषिः । 10 महावैष्टम्भं द्वितीयम् । विष्टम्भः ऋषिः । तृतीयमभिनिधनं काण्वम् । कण्व ऋषिः । चतुर्थं दिङ्निधनं महावैष्टम्भम् । विष्टम्भः ऋषिः ॥ (ग्रा. गे. ४५१-४) ॥ २६१ ॥

**यदिन्द्र नाहुषीष्वा** (१०) इत्यृचः भरद्वाजः ऋषिः । साम्नः श्नौष्टीगवस्य श्नुष्टीगुः ऋषिः ॥ (ग्रा. गे. ४५५) ॥ २६२ ॥

15 ॥ इत्यैन्द्रे तृतीयेऽध्याये तृतीयः खण्डः ॥ ३ ॥

## चतुर्थः खण्डः

**सत्यमित्था वृषेदसि** (१) इत्यृचः मेधातिथिः ऋषिः । साम्न इन्द्रस्य वृषकस्य इन्द्रः ऋषिः (ग्रा. गे. ४५६) ॥ २६३ ॥

**यच्छक्रासि परावति** (२) इत्यृचो रेभः ऋषिः । साम्नोः द्वैगतयोः 20 द्विगद्भार्गव ऋषिः ॥ (ग्रा. गे. ४५७-८) ॥ २६४ ॥

---

4. My B. वाचे for वाम्रे See CN.
8. Sm. मेधा° for मेध्या°
14, My श्नोष्टोभवस्य for श्नौष्टीगवस्य
15,16. अनुवाकः for खण्डः
17. L. Om. ऋषिः

अभि वो वीरमन्धसः (३) इत्यृचः वंश ऋषिः। साम्नः कार्त-
यशसस्य कृतयशा ऋषिः ॥ (ग्रा. गे. ४५९) ॥ २६५ ॥

इन्द्र त्रिधातु शरणम् (४) इत्यृचः भरद्वाजः ऋषिः। इन्द्रस्य
शरणस्य इन्द्रः ऋषिः ॥ (ग्रा. गे. ४६०) ॥ २६६ ॥

श्रायन्त इव सूर्यम् (५) इत्यृचः नृमेधः ऋषिः। साम्नः श्रायन्तीयस्य 5
प्रजापतिः ऋषिः ॥ (ग्रा. गे. ४६१) ॥ २६७ ॥

न सीमदेव आप तत् (६) इत्यृचः पुरुहन्मा ऋषिः। साम्नो
वाभ्रस्य वाभ्र ऋषिः ॥ (ग्रा. गे. ४६२) ॥ २६८ ॥

आ नो विश्वासु हव्यम् (७) इत्यृचः नृमेधपुरुमेधावृषी। साम्नां
वैय्यश्वानां त्रयाणां व्यश्व आङ्गिरस ऋषिः ॥ (ग्रा. गे. ४६३-५) ॥ २६९ ॥ 10

तवेदिन्द्रावमं वसु (८) इत्यृचः वसिष्ठः ऋषिः। साम्नो निधन-
कामस्य प्रजापतिः ऋषिः ॥ (ग्रा. गे. ४६६) ॥ २७० ॥

क्वेयथ क्व (९) इत्यृचो मेधातिथिमेध्यातिथी ऋषी। साम्नां
त्रयाणामिन्द्रस्य प्रियाणामिन्द्रः ऋषिः ॥ (ग्रा. गे. ४६७-९) ॥ २७१ ॥

वयमेनमिदा ह्यः (१०) इत्यृचः कलिः ऋषिः। साम्नामिन्द्रस्य 15
वैरूपाणां त्रयाणामिन्द्रः ऋषिः। वसिष्ठो वा ॥ (ग्रा. गे. ४७०-२) ॥ २७२ ॥

॥ इत्यैन्द्रे तृतीयेऽध्याये चतुर्थः खण्डः ॥ ४ ॥

---

1. My BL. अभी for अभि ; Sm. वत्सः for वंशः
17. अनुवाकः for खण्डः

## पञ्चमः खण्डः

**यो राजा चर्षणीनाम्** (१) इत्यृचः पुरुहन्मा ऋषिः । साम्नोराद्यस्य पौरुहन्मनस्य पुरुहन्मा वैखानसः ऋषिः ॥ द्वितीयस्य प्राकर्षस्य प्रकर्ष ऋषिः (ग्रा. गे. ४७३-४) ॥ २७३ ॥

5 **यत इन्द्र भयामहे** (२) इत्यृचः भर्गः ऋषिः । साम्नः अभयंकरस्य इन्द्रः ऋषिः ॥ (ग्रा. गे. ४७५) ॥ २७४ ॥

**वास्तोष्पते** (३) इत्यृचः इरिमीढः ऋषिः । साम्नोः कावषयोः कवषः ऋषिः ॥ (ग्रा. गे. ४७६-७) ॥ २७५ ॥

**बण्महाँ असि** (४) इत्यृचः जमदग्निः ऋषिः । सूर्यो देवता ।
10 साम्नः सूर्यस्य साम्नः सूर्यः ऋषिः ॥ (ग्रा. गे. ४७८) ॥ २७६ ॥

**अश्वी रथी सुरूपः** (५) इत्यृचः देवातिथिः ऋषिः । साम्नोरानूपयोः वध्र्यश्वस्य आनूपः ऋषिः ॥ (ग्रा. गे. ४७९-४८०) ॥ २७७ ॥

**यद् द्याव इन्द्र ते शतम्** (६) इत्यृचः [पुरुहन्मा ऋषिः ।] साम्नो वैरूपस्य विरूपः ऋषिः (ग्रा. गे. ४८१)॥ २७८ ॥

15 **यदिन्द्र प्रागपागुदक्** (७) इत्यृचो देवातिथिः ऋषिः । साम्नोर्नैपातिथयोः निपातिथिः ऋषिः ॥ (ग्रा. गे. ४८२-३) ॥ २७९ ॥

**कस्तमिन्द्र त्वा** (८) इत्यृचः वसिष्ठः ऋषिः । साम्नोः बृहतः कौमुदस्य साम्नोः बृहत्कुमुदः ऋषिः ॥ (ग्रा. गे. ४८४-५) ॥ २८० ॥

**इन्द्राग्नी अपात्** (९) इत्यृचः भरद्वाजः ऋषिः । साम्नो वाचःसाम्नः
20 वागृषिः । इन्द्राग्नी देवते । (ग्रा. गे. ४८६) ॥ २८१ ॥

---

7. Sm. इरिम्बिठिः for इरिमीढः; MyB. कावयोः कवः, for कावषयोः कवषः

15. My. साम्नः for साम्नोः

इन्द्र नेदीय एदिहि (१०) इत्यृचः बालखिल्याः ऋषयः। ...नोर्वाभ्रयोः वाभ्रः ऋषिः ॥ (ग्रा. गे. ४८७-८) ॥ २८२ ॥

॥ इत्यैन्द्रे तृतीऽध्याये पञ्चमः खण्डः ॥

---

## षष्ठः खण्डः

इत ऊती वो अजरम् (१) इत्यृचः नृमेधः ऋषिः। साम्नोः ...र्हितयोः (गौरीवितयोः ?) गौरीवितिः ऋषिः ॥ (ग्रा. गे. ४८९-४९०) ॥ २८३ ॥ 5

मो षु त्वा वाघतश्च न (२) इत्यृचः वसिष्ठः ऋषिः। साम्नो-...त्रैयोः अत्रिः ऋषिः ॥ (ग्रा. गे. ४९१-२) ॥ २८४ ॥

सुनोत सोम (३) इत्यृचः वसिष्ठः ऋषिः। साम्नोर्गौरीवितयोः ...ौरीवितिः ऋषिः ॥ (ग्रा. गे. ४९३-४) ॥ २८५ ॥ 10

यः सत्राहा विचर्षणिः (४) इत्यृचः भरद्वाजः ऋषिः। साम्नो ...ामदेव्यस्य वामदेवः ऋषिः ॥ (ग्रा. गे. ४९५) ॥ २८६ ॥

शचीभिर्नः शचीवसू (५) इत्यृचः परुच्छेपः ऋषिः। अश्विनौ ...दैवते। साम्नः अश्विनोः साम्नः अश्विनावृषी ॥ (ग्रा. गे. ४९६) ॥ २८७ ॥ 15

यदा कदा च मीढुषे (६) इत्यृचः वामदेवः ऋषिः। वरुणो देवता। साम्नां वसिष्ठस्य पञ्चाणां त्रयाणां वसिष्ठः ऋषिः ॥ (ग्रा. गे. ४९७-९९) ॥ २८८ ॥

पाहि गा अन्धसः (७) इत्यृचः मेध्यातिथिः ऋषिः। साम्नोः सौभरयोः सौभरिः ऋषिः ॥ (ग्रा. गे. ५००-१) ॥ २८९ ॥ 20

---

14. MyLB वसो for °वसू ; MyLB. पाषरछेपः for परुच्छेपः.

16. वरुणो देवता See CN.

19. Sm. मेधातिथिः for मेध्यातिथिः

**उभयं शृणवच्च नः** (८) इत्यृचः भर्गः ऋषिः। साम्नो वै
व्यश्वः ऋषिः (ग्रा. गे. ५०२) ॥ २९० ॥

**महे च न त्वाद्रिवः** (९) इत्यृचः मेधातिथि-मेध्यातिथी
साम्नोः इन्द्रस्य सहस्रायुतीययोः इन्द्रः प्रजापतिर्वा ऋषिः ॥ (ग्रा.
5 ५०३-४) ॥ २९१ ॥

**वस्याँ इन्द्रासि मे पितुः** (१०) इत्यृचः मेधातिथिमेध्यातिथी ऋ
साम्नः इन्द्राण्याः साम्नः इन्द्राणी ऋषिका ॥ (ग्रा. गे. ५०५) ॥ २९२

॥ इत्यैन्द्रे तृतीयेऽध्याये षष्ठः खण्डः ॥

---

## सप्तमः खण्डः

10 **इम इन्द्राय सुन्विरे** (१) इत्यृचः वसिष्ठः ऋषिः। साम्नः सौभरस्य
सुभरिः ऋषिः ॥ (ग्रा. गे. ५०६) ॥ २९३ ॥

**इम इन्द्र मदाय ते** (२) इत्यृचः वामदेवः[ऋषिः]। विश्वामित्र इत्येके।
साम्नो गार्त्समदस्य गृत्समदः ऋषिः ॥ (ग्रा. गे. ५०७) ॥ २९४ ॥

**आ त्वाद्य सबर्दुघाम्** (३) इत्यृचः मेधातिथि-मेध्यातिथी ऋषी।
15 साम्नो वाचः साम्नः वागृषिः ॥ (ग्रा. गे. ५०८) ॥ २९५ ॥

**न त्वा बृहन्तः** (४) इत्यृचः नोधा ऋषिः। साम्नो बार्हदुक्थस्य
बृहदुक्थो वाम्नेयः ऋषिः ॥ (ग्रा. गे. ५०९) ॥ २९६ ॥

---

2. MyLB. विश्वः for व्यश्वः
3. MyLB. त्वामद्रिवः for त्वाद्रिवः
4. MyLB. ऋषी for ऋषिः
14. MyLB. साबर् for सबर्; MyB. मेधातिधिमेध्यातिथिः for मेधातिथि-मेध्यातिथी.
17. My वाङ्मेयः for वाम्नेयः

क ईं वेद सुते सचा (५) इत्यृचः मेधातिथिः ऋषिः। साम्नो वार्शः ऋषिः ॥ (ग्रा. गे. ५१०) ॥ २९७ ॥

यदिन्द्र शासो अव्रतम् (६) इत्यृचः वामदेवः ऋषिः। साम्नस्तौर-तुरश्रवाः ऋषिः (ग्रा. गे. ५११) ॥ २९८ ॥

त्वष्टा नो दैव्यम् (७) इत्यृचो वामदेवः ऋषिः। बहुर्दैवते[त्येके]। 5 म्नस्त्वाष्ट्रीयसाम्नः त्वाष्ट्री ऋषिः ॥ (ग्रा. गे. ५१२) ॥ २९९ ॥

कदा चन स्तरीरसि (८) इत्यृचः बालखिल्याः ऋषयः। साम्नः दितेः साम्नः अदितिः ऋषिः ॥ (ग्रा. गे. ५१३) ॥ ३०० ॥

युङ्क्ष्वा हि वृत्रहन्तम (९) इत्यृचः मेध्यातिथिः ऋषिः। साम्न आ?) जीगर्तस्य अजीगर्तिः ऋषिः ॥ (ग्रा. गे. ५१४) ॥ ३०१ ॥ 10

त्वामिदा ह्यो नरः (१०) इत्यृचो नृमेधः ऋषिः। साम्नो माधु-च्छन्दसस्य मधुच्छन्दा ऋषिः ॥ (ग्रा. गे. ५१५) ॥ ३०२ ॥

॥ इत्यैन्द्रे तृतीयेऽध्याये सप्तमः खण्डः ॥

## अष्टमः खण्डः

प्रत्यु अदर्श्यायति (१) इत्यृचः वसिष्ठः ऋषिः। उषा देवता। 15 म्नः उषःसाम्नश्च उषा ऋषिः ॥ (ग्रा. गे. ५१६) ॥ ३०३ ॥

इमा उ वाम् (२) इत्यृचो वसिष्ठः ऋषिः। अश्विनौ देवता। श्विनो. साम्नश्च अश्विनावेव ऋषी ॥ (ग्रा. गे. ५१७) ॥ ३०४ ॥

---

2. L. वाशस्य for वार्शस्य वार्शः
7. Sm. इनुष्टिगुः काण्वः for वालखिल्याः
10 MyLB. अजिगीर्तस्य अजिगीर्तः (L° र्तिः) for आजीगर्तस्य अजीगर्तिः
17. MyBL. वा for वाम्.

[कुष्ठः को वाम् (३) इत्यृचः अश्विनावृषी। अश्विनौ देव[illegible]
साम्नः अश्विनोः संयोजनस्य साम्नश्च अश्विनौ ऋषी ॥ (ग्रा. गे. ५[illegible]
॥ ६०५ ॥

अयं वां मधुमत्तमः (४) इत्यृचः प्रस्कण्वः काण्वः ऋषिः। अश्वि[illegible]
5 साम्नश्च अश्विनावेव ऋषी। [(ग्रा. गे. ५१९) ॥ ३०६ ॥]

आ त्वा सोमस्य गल्दया (५) इत्यृचः मेधातिथि–मेध्यातिथी ऋषी।
साम्नः सोमसाम्नः सोम ऋषिः ॥ (ग्रा. गे. ५२०) ॥ ३०७ ॥

अध्वर्यो द्रावया त्वम् (६) इत्यृचः देवातिथिः ऋषिः। साम्नः
आजमायवस्य अजमायुः ऋषिः ॥ (ग्रा. गे. ५२१) ॥ ३०८ ॥

10 अभीषतस्तद् (७) इत्यृचः वसिष्ठः ऋषिः। साम्नः प्रैयमेधस्य
प्रियमेधा ऋषिः ॥ (ग्रा. गे. ५२२) ॥ ३०९ ॥

यदिन्द्र यावतस्त्वम् (८) इत्यृचः वसिष्ठः ऋषिः। साम्नोरिन्द्रस्य
वैरूपयोः विरूपः ऋषिः। वसिष्ठो वा ॥ (ग्रा. गे. ५२३-४) ॥ ३२० ॥

15 त्वमिन्द्र प्रतूर्तिषु (९) इत्यृचः नृमेधा ऋषिः। साम्नो वैश्वदेवस्य
विश्वेदेवा ऋषयः ॥ (ग्रा. गे. ५२५) ॥ ३११ ॥

प्र यो रिरिक्ष ओजसा (१०) इत्यृचः नोधा ऋषिः। साम्नः
आथर्वणस्य अथर्वा ऋषिः ॥ (ग्रा. गे. ५२६) ॥ ३१२ ॥

॥ इत्यैन्द्रे तृतीयेऽध्याये अष्टमः खण्डः ॥
20 ॥ [इति] बृहत्योऽशीतयः (!) ॥

---

1. MyBL. Om: कुष्ठः कोवाम् ...अश्विनावेव ऋषी. L. 5; See CN.
6. MyBL: प्रस्कण्व ऋषिः for मेधातिथिमेध्यातिथी ऋषी. See CN.
20. आशीतयः See CN.

## ॥ नवमः खण्डः ॥

## ॥ अथ त्रैष्टुभः ॥

असावि देवम् (१) इत्यृचः वसिष्ठः ऋषिः। साम्नोराद्यस्य प्राकर्षस्य
प्रकर्षः ?) ऋषिः। [द्वितीयस्य निहवस्य वसिष्ठः ऋषिः॥ (ग्रा. गे.
) ॥ ३१३ ॥ 5

योनिष्ट इन्द्र सदने (२) इत्यृचः वसिष्ठः ऋषिः। साम्नोर्योनिनोः
दः ऋषिः॥ (ग्रा. गे. ५२९-३०) ॥ ३१४ ॥

अदर्दरुत्समसृजः (३) इत्यृचः गातुरात्रेयः ऋषिः। औरुक्षययोः
उरुक्षयः ऋषिः॥ (ग्रा. गे. ५३१-२) ॥ ३१५ ॥]

सुष्वाणासः (४) इत्यृचः पृथुर्वैन्यः ऋषिः। साम्नोः पाक्ष(र्थ?)योः 10
: ऋषिः॥ (ग्रा. गे. ५३३-४) ॥ ३१६ ॥

जगृह्मा ते दक्षिणम् (५) इत्यृचः सप्तगुः [ऋषिः]। साम्नां
ाद्ये सौपर्णे। तयोः सुपर्णः ऋषिः। त्रीणि वात्सप्राणि। [तयोः
ऋषिः।] क्षुल्लकवात्सप्रं तृतीयम्। महावात्सप्रं पञ्चमम्॥ (ग्रा. गे.
-९) ॥ ३१७ ॥

इन्द्रं नरो ने[मधिता] (६) इत्यृचः वसिष्ठः ऋषिः। साम्नो
स्य गौरीवितिः ऋषिः॥ (ग्रा. गे. ५४०) ॥ ३१८ ॥

व्यः सुपर्णा (७) इत्यृचः गौरीवितिः ऋषिः। साम्नो वैदन्वतस्य
भार्गवः ऋषिः॥ (ग्रा. गे. ५४१) ॥ ३१९ ॥

नाके सुपर्णम् (८) इत्यृचः वेनो भार्गवः ऋषिः। साम्नो महाया-
: ऋषिः॥ (ग्रा. गे. ५४२) ॥ ३२० ॥ 20

---

B My L. om. द्वितीयस्य....उरुक्षयः ऋषिः L. 9; See CN.
MyB. सप्तउः, L. सप्तमः for सप्तगुः
MyBL. गौरीवितः for गौरीवितिः See CN.

[कुष्ठः को वाम् (३) इत्यृचः अश्विनावृषी। अश्विनौ देव[...] साम्नः अश्विनोः संयोजनस्य साम्नश्च अश्विनौ ऋषी॥ (ग्रा. गे. ५[...] ॥ ६०५ ॥

अयं वां मधुमत्तमः (४) इत्यृचः प्रस्कण्वः काण्वः ऋषिः। अश्वि[...]
5 साम्नश्च अश्विनावेव ऋषी। [(ग्रा. गे. ५१९) ॥ ३०६ ॥]

आ त्वा सोमस्य गल्दया (५) इत्यृचः मेधातिथि–मेध्यातिथी ऋषी। साम्नः सोमसाम्नः सोम ऋषिः॥ (ग्रा. गे. ५२०) ॥ ३०७ ॥

अध्वर्यो द्रावया त्वम् (६) इत्यृचः देवातिथिः ऋषिः। साम्नः आजमायवस्य अजमायुः ऋषिः॥ (ग्रा. गे. ५२१) ॥ ३०८ ॥

10 अभीषतस्तद् (७) इत्यृचः वसिष्ठः ऋषिः। साम्नः प्रैयमेधस्य प्रियमेधा ऋषिः॥ (ग्रा. गे. ५२२) ॥ ३०९ ॥

यदिन्द्र यावतस्त्वम् (८) इत्यृचः वसिष्ठः ऋषिः। साम्नोरिन्द्रस्य वैरूपयोः विरूपः ऋषिः। वसिष्ठो वा॥ (ग्रा. गे. ५२३-४) ॥ ३२० ॥

15 त्वमिन्द्र प्रतूर्तिषु (९) इत्यृचः नृमेधा ऋषिः। साम्नो वैश्वदेवस्य विश्वेदेवा ऋषयः॥ (ग्रा. गे. ५२५) ॥ ३११ ॥

प्र यो रिरिक्ष ओजसा (१०) इत्यृचः नोधा ऋषिः। साम्नः आथर्वणस्य अथर्वा ऋषिः॥ (ग्रा. गे. ५२६) ॥ ३१२ ॥

॥ इत्यैन्द्रे तृतीयेऽध्याये अष्टमः खण्डः ॥
20 ॥ [इति] बृहत्योऽशीतयः (!) ॥

---

1. MyBL. Om: कुष्ठः कोवाम् ...अश्विनावेव ऋषी. L. 5; See CN.

6. MyBL: प्रस्कण्व ऋषिः for मेधातिथिमेध्यातिथी ऋषी. See CN.

20. आशीतयः See CN.

## ॥ नवमः खण्डः ॥

## ॥ अथ त्रैष्टुभः ॥

**असावि देवम्** (१) इत्यृचः वसिष्ठः ऋषिः। साम्नोराद्यस्य प्राकर्षस्य
: (प्रकर्षः ?) ऋषिः। [द्वितीयस्य निहवस्य वसिष्ठः ऋषिः॥ (ग्रा. गे.
२८) ॥ ३१३ ॥ 5

**योनिष्ट इन्द्र सदने** (२) इत्यृचः वसिष्ठः ऋषिः। साम्नोर्योनिनोः
त्समदः ऋषिः॥ (ग्रा. गे. ५२९-३०) ॥ ३१४ ॥

**अदर्दरुत्समसृजः** (३) इत्यृचः गातुरात्रेयः ऋषिः। औरुक्षययोः
म्नोः उरुक्षयः ऋषिः॥ (ग्रा. गे. ५३१-२) ॥ ३१५ ॥]

**सुष्वाणासः** (४) इत्यृचः पृथुर्वैन्यः ऋषिः। साम्नोः पाक्ष(र्थ?)योः 10
थुर्वैन्यः ऋषिः॥ (ग्रा. गे. ५३३-४) ॥ ३१६ ॥

**जगृह्मा ते दक्षिणम्** (५) इत्यृचः सप्तगुः [ऋषिः]। साम्नां
ग्नानामाद्ये सौपर्णे। तयोः सुपर्णः ऋषिः। त्रीणि वात्सप्राणि। [तयोः
त्सप्रः ऋषिः।] क्षुल्लकवात्सप्रं तृतीयम्। महावात्सप्रं पञ्चमम्॥ (ग्रा. गे.
३५-९) ॥ ३१७ ॥ 15

**इन्द्रं नरो ने[मधिता]** (६) इत्यृचः वसिष्ठः ऋषिः। साम्नो
रीवितस्य गौरीवितिः ऋषिः॥ (ग्रा. गे. ५४०) ॥ ३१८ ॥

**वयः सुपर्णा** (७) इत्यृचः गौरीवितिः ऋषिः। साम्नो वैदन्वतस्य
दन्वान् भार्गवः ऋषिः॥ (ग्रा. गे. ५४१) ॥ ३१९ ॥

**नाके सुपर्णम्** (८) इत्यृचः वेनो भार्गवः ऋषिः। साम्नो महाया-
स्य यमः ऋषिः॥ (ग्रा. गे. ५४२) ॥ ३२० ॥ 20

---

4. B My L. om. द्वितीयस्य....उरुक्षयः ऋषिः L. 9; See CN.
12. MyB. सप्तउः, L: सप्तमः for सप्तगुः
17. MyBL. गौरीवितः for गौरीवितिः See CN.

**ब्रह्म जज्ञानम्** (९) इत्यृचः वामदेवः [ऋषिः ।] साम्नो[म्नीः]। ऋतोः सामनी द्वे । [तयोः] ऋतुः ऋषिः ॥ (ग्रा. गे. ५४३-४)॥ ३२१ ॥

**अपूर्व्या पुरुतमानि** ॥ (१०) इत्यृचः सुहोत्रो भरद्वाजः ऋषिः । साम्नः इन्द्रस्य वारवन्तीयस्य इन्द्रः ऋषिः ॥ (ग्रा. गे. ५४५) ॥ ३२२ ॥

5 ॥ इत्यैन्द्रे तृतीयेऽध्याये नवमः खण्डः ॥

---

## ॥ दशमः खण्डः ॥

**अव द्रप्सः** (१) इत्यृचः द्युतानः ऋषिः। साम्नां चतुर्णाम् आद्ययोः इन्द्रस्य क्षुरपविणी । तयोरिन्द्रः ऋषिः । सौमरश्मे द्वे । तयोरिन्द्रः ऋषिः ॥ (ग्रा. गे. ५४६-९) ॥ ३२३ ॥

10 **वृत्रस्य त्वा श्वसथ** (२) इत्यृचः द्युतानः ऋषिः । साम्नोः द्युतानस्य मारुतस्य साम्नोर्द्युतानः ऋषिः ॥ (ग्रा. गे. ५५०–१) ॥ ३२४ ॥

**विधुं दद्राणम्** (३) इत्यृचः बृहदुक्थः ऋषिः। साम्नोः सोमसाम्नोः सोमः ऋषिः ॥ (ग्रा. गे. ५५२-३) ॥ ३२५ ॥

**त्वं ह त्यत्** (४) इत्यृचः द्युतानः ऋषिः । साम्नोरिन्द्रवज्रयोः 15 इन्द्रः ऋषिः ॥ (ग्रा. गे. ५५४-५) ॥ ३२६ ॥

**मोर्डि न त्वा** (५) इत्यृचः वामदेवः ऋषिः । साम्नोर्भृष्टिमतोः सूर्यवर्चसोर्भृष्टिमान् सूर्यवर्चाः ऋषिः ॥ (ग्रा. गे. ५५६-७) ॥ ३२७ ॥

**प्र वो महे** (६) इत्यृचः वसिष्ठः ऋषिः । साम्नोर्वसिष्ठस्याङ्कुशयोर्वसिष्ठः ऋषिः ॥ (ग्रा. गे. ५५८-९) ॥ ३२८ ॥

---

1. Sm: बृहस्पतिर्नकुलो वा for वामदेवः
2. MyBL. ऋतः for ऋतोः, MyL. B: ऋतः for ऋतुः
8. Sm. स्यौम ' for सौम°.

शुनं हुवेम (७) इत्यृचः विश्वामित्रः ऋषिः । साम्नो भारद्वाजस्य भरद्वाजः ऋषिः ॥ (ग्रा. गे. ५६०) ॥ ३२९ ॥

उदु ब्रह्माणि (८) विश्वामित्रः ऋषिः । साम्नो वैश्वदेवस्य विश्वेदेवा ऋषयः ॥ (ग्रा. गे. ५६१) ॥ ३३० ॥

चक्रं यदस्य (९) इत्यृचः गौरीवितिः ऋषिः । साम्नः आथर्वणस्य अथर्वा ऋषिः ॥ (ग्रा. गे. ५६२) ॥ ३३१ ॥ 5

॥ इत्यै तृतीयेऽध्याये दशमः खण्डः ॥

---

॥ एकादशः खण्डः ॥

त्यमू षु वाजिनम् (१) इत्यृचः तार्क्ष्यपुत्रो अरिष्टनेमिः ऋषिः । साम्नोः तार्क्ष्यसाम्नोः तार्क्ष्यः ऋषिः ॥ (ग्रा. गे. ५६३-४) ॥ ३३२ ॥ 10

त्रातारमिन्द्रम् (२) इत्यृचः भरद्वाजः ऋषिः । साम्नः इन्द्रस्य त्रातस्य इन्द्रः ऋषिः ॥ (ग्रा. गे. ५६५) ॥ ३३३ ॥

यजामहे (३) इत्यृचः वसुकृदृषिः । विमदो वा ऋषिः । साम्नो वार्त्रतुरस्य वृत्रतुरो ऋषिः । यज्ञतुरो वा ॥ (ग्रा. गे. ५६६) ॥ ३३४ ॥

सत्राहणम् (४) इत्यृचः वामदेवः ऋषिः । साम्नोर्धृषतो मारुतस्य साम्नोः धृषन्मारुतः ऋषिः ॥ (ग्रा. गे. ५६७-८) ॥ ३३५ ॥ 15

यो नो वनुष्यन् (५) इत्यृचः वामदेवः ऋषिः । साम्न आग्नस्य अग्निः ऋषिः ॥ (ग्रा. गे. ५६९) ॥ ३३६ ॥

---

9. BMy. वाजिनः for वाजिनम् ; B My om. इत्यृचः

12. Sm. तातस्य for त्रातस्य

**यं वृत्रेषु** (६) इत्यृचः वामदेवः ऋषिः। साम्नोर्गात्सम
गृत्समदः ऋषिः ॥ (ग्रा. गे. ५७०-१) ॥ ३३७ ॥

**इन्द्रापर्वता** (७) इत्यृचः विश्वामित्रः [ऋषिः।] साम्नो वैश्वामि
विश्वामित्रः ऋषिः ॥ (ग्रा. गे. ५७२) ॥ ३३८ ॥

5 **इन्द्राय गिरः** (८) इत्यृचः रेणुर्वैश्वामित्रः ऋषिः। साम्नां सा
त्राणां षण्णां सविता ऋषिः। हा हा [इ] इत्यादिपञ्चभिस्तोभैः प्रतिस्तो
मार्चिकचतुष्टयोपेतैः पञ्च सावित्राणि ॥ (ग्रा. गे. ५७३) ॥ ३३९ ॥

**आ त्वा सखायः** (९) इत्यृचः वामदेवः ऋषिः। साम्नः कुती
पादस्य वैरूपस्य विरूपः ऋषिः ॥ (ग्रा. गे. ५७४) ॥ ३४० ॥

10 **को अद्य युङ्क्ते** (१०) इत्यृचः गौतमः ऋषिः। साम्नः आमहीय-
वस्य आमहीयुः ऋषिः ॥ (ग्रा. गे. ५७५) ॥ ३४१ ॥

॥ इत्यैन्द्रे तृतीयेऽध्याये एकादशः खण्डः ॥

[इति त्रिष्टुभः]

---

॥ द्वादशः खण्डः ॥

15 **गायन्ति त्वा** इति दश[ानुष्टु]भ्यो ऋचः। इन्द्रो देवता ॥

**गायन्ति त्वा गायत्रिणः** (१) इत्यृचः [मधुच्छन्दा ऋषिः।]
साम्नामाद्ये शौखण्डिने। तयोः शिखण्डी ऋषिः। तृतीयमुद्वंशीयम्।
विश्वेदेवा ऋषयः ॥ (ग्रा. गे. ५७८) ॥ ३४२ ॥

---

1. BMy. L. गृत्समदयोः for गार्त्समदयोः

5. BMy L. इन्द्र या for इन्द्राय

इन्द्रं विश्वा अवीवृधन् (२) इत्यृचः जेता मधुच्छन्दा ऋषिः। ...षां सप्तानामाद्यानि त्रीणि शैखण्डिनानि। तेषां शिखण्डी ऋषिः। द्वे ...दंष्ट्रे। तयोरष्टादंष्ट्रो वैरूपः ऋषिः। महावैश्वामित्रे द्वे। तयोर्विश्वामित्रः ...ः ॥ (ग्रा. गे ५७९-५८५) ॥ ३४३ ॥

इममिन्द्र सुतं पिब (३) इत्यृचः गौतमः ऋषिः। साम्नां चतुर्णां 5
...सिष्ठस्य प्रियाणां वसिष्ठः ऋषिः। द्वितीयं गौतमं वा। तस्य गौतमः ऋषिः॥ ...ग्रा. गे. ५८६-८) ॥ ३४४ ॥

यदिन्द्र चित्र म इह न (४) इत्यृचः अत्रिः ऋषिः। सामानि ...चत्वारि वीङ्कानि। द्वयोर्गृत्समदः ऋषिः। तृतीयम् आकूपारं वा। तस्य ...आकूपाराङ्गिराः ऋषिः ॥ (ग्रा. गे ५९०-३) ॥ ३४५ ॥ 10

श्रुधी हवं तिरश्च्या (५) इत्यृचः तिरश्चाङ्गिरसः ऋषिः। साम्नोश्च ...तिरश्चयोः स एव ॥ (ग्रा. गे. ५९४-५) ॥ ३४६ ॥

असावि सोम इन्द ते (६) इत्यृचः गौतमः ऋषिः। साम्नो ...वैश्वामित्रस्य विश्वामित्रः ऋषिः ॥ (ग्रा. गे. ५९६) ॥ ३४७ ॥

एन्द्र याहि (७) इत्यृचः कण्वो नीपातिथिः ऋषिः। साम्नोः 15
...काण्वयोश्च स एव ॥ (ग्रा. गे. ५९७-८) ॥ ३४८ ॥

आ त्वा गिरो रथी (८) इत्यृचः तिरश्चीः ऋषिः। साम्नो ...वैश्वामित्रस्य विश्वामित्र ऋषिः ॥ (ग्रा. गे. ५९९) ॥ ३४९ ॥

एतो न्विन्द्रं स्तवाम (९) इत्यृचः तिरश्चीः ऋषिः। साम्नोः ...शुद्धाःशुद्धीययोः इन्द्रः ऋषिः। वसिष्ठो [वा] ऋषिः ॥ (ग्रा. गे. ६००-१) ॥ 20
...५० ॥

---

2. BMy L. साप्तानां for साम्नां

14. Sm. महावैश्वामित्रस्य for विश्वामित्रस्य

19. Sm. विश्वमित्रो गाथिनः for तिरश्चीः See CN.

**यो रयिं वो रयिम्** (१०) इत्यृचः शंयुर्बार्हस्पत्यः ऋषिः। रैषयोर्गौतमः ऋषिः ॥ (ग्रा. गे. ६०२-३) ॥ ३५१ ॥

**॥ इत्यैन्द्रे तृतीयेऽध्याये द्वादशः खण्डः ॥**

**॥ इति तृतीयोऽध्यायः ॥**

# ॥ चतुर्थोऽध्यायः ॥

## ॥ प्रथमः खण्डः ॥

अथैन्द्रे द्वयोरनुवाकयोरानुष्टुभ्यो ऋचः ॥

**प्रत्यस्मै पिपीषते** (१) इत्यृचः भरद्वाजः ऋषिः । साम्नां त्रयाणाम्
ाद्ये कौल्मलबर्हिषसामनी । तयोः कुल्मलबर्हिः ऋषिः । तृतीयं नानदम् । 5
स्य नदन्नाङ्गिरसः ऋषिः ॥ (ग्रा. गे. ६०४-६) ॥ ३५२ ॥

**आ नो वयो वयःशयम्** (२) इत्यृचः वामदेवः ऋषिः । साम्नः
ाक[पूतस्य] श[ा]क[पूतिः] ऋषिः ॥ (ग्रा. गे. ६०७) ॥ ३५३ ॥

**आ त्वा रथं यथोतये** (३) इत्यृचः प्रियमेधा ऋषिः । साम्नोः
ौल्मल[बर्हिषयोः] कुल्मलबर्हिः ऋषिः ॥ (ग्रा. गे. ६०८-९) ॥ ३५४ ॥ 10

**स पूर्व्यो महोनाम्** (४) इत्यृचः प्रगाथः ऋषिः । साम्नो मधु-
श्चुन्निधनस्य प्रजापतिः ऋषिः ॥ (ग्रा. गे. ६१०) ॥ ३५५ ॥

**यदी वहन्त्याश[वः]** (५) इत्यृचः श्यावाश्व आत्रेयः ऋषिः ।
तौ देवता । साम उषसः साम । तस्य उषा ऋषिः ॥ (ग्रा. गे. ६११)
३५६ ॥ 15

**[त्यमु वो अप्रहणम्** (६) इत्यृचः शंयुर्बार्हस्पत्यः ऋषिः । साम्नः
द्वाजस्य भरद्वाजः ऋषिः ॥ (ग्रा. गे. ६१२) ॥ ३५७ ॥

**दधिक्राव्णो अकारिषम्** (७) इत्यृचः वामदेवः ऋषिः । साम्नः
क्राव्णस्य दधिक्रा ऋषिः ॥ (ग्रा. गे. ६१३) ॥ ३५८ ॥

---

3. BMy L. अनु° for आनु°.
6. BMy. नदन्नामगिरः for नदन्नाङ्गिरसः

**पुरां भिन्दुः** (८) इत्यृचः जेता [माधुच्छन्दसः] ऋषिः। माधुच्छन्दसस्य मधुच्छन्दा ऋषिः ॥ (ग्रा. गे. ६१४) ॥ ३५९ ॥

**॥ इत्यैन्द्रे चतुर्थेऽध्याये प्रथमः खण्डः ॥ १ ॥**

---

## ॥ द्वितीयः खण्डः ॥

5 **प्रप्र वस्त्रिष्टुभमिषम्** (१) इत्यृचः प्रियमेधा ऋषिः। साम्नो वा देव्यस्य वामदेवः ऋषिः ॥ (ग्रा. गे. ६१५) ॥ ३६० ॥

**कश्यपस्य** (२) इत्यृचः वामदेवः ऋषिः। इन्द्राणी देवता। साम्नश्च काश्यपस्य कश्यपः ऋषिः ॥ (ग्रा. गे. ६१६) ॥ ३६१ ॥

**अर्चत प्रार्चता** (३) इत्यृचः प्रियमेधा ऋषिः। मित्रावरुणौ देवता।
10 साम्नः प्रैयमेधस्य प्रियमेधा ऋषिः ॥ (ग्रा. गे. ६१७) ॥ ३६२ ॥

**उक्थमिन्द्राय शंस्यम्** (४) इत्यृचः मधुच्छन्दा ऋषिः। मित्रावरुणौ देवते। साम्नो बार्हदुकूथस्य बृहदुकूथः ऋषिः ॥ (ग्रा. गे. ६१८) ॥३६३॥

**विश्वानरस्य वस्पतिम्** (५) इत्यृचः प्रियमेधा ऋषिः। साम्नोऽग्नेर्वैश्वानरयोः अग्निर्वैश्वानरः ऋषिः ॥ (ग्रा. गे. ६१९-२०) ॥ ३६४ ॥

15 **स घा यस्ते दिवो नरः** (६) इत्यृचः भरद्वाजः ऋषिः। साम्नोः शाकपूतयोः शाकपूतिः ऋषिः ॥ (ग्रा. गे. ६२१-२) ॥ ३६५ ॥

**विभोष्ट इन्द्र** (७) इत्यृचः अत्रिः ऋषिः। साम्नो वरुणान्याः साम्नः वरुणानी ऋषिः ॥ (ग्रा. गे. ६२३) ॥ ३६६ ॥

**वयश्चित्ते पतत्रिणः** (८) इत्यृचः प्रस्कण्वः ऋषिः। उषा देवता।
20 साम्नः औषसस्य उषा ऋषिः ॥ (ग्रा. गे. ६२४) ॥ ३६७ ॥

---

7. इन्द्राणी See CN.
11. वरुणौ See CN.
15. MyBL. सखा for स घा.
16. MyLB. शुक्रभूतः for शाकभूतिः See CN.

:अमी ये देवा स्थन (९) इत्यृचः आप्त्य(प्त्य ?)स्त्रितः ऋषिः। दे॒वा देवताः। साम्नो रोचनस्य रुचिः ऋषिः ॥ (ग्रा. गे. ६२५) ॥ ॥

ऋचं साम (१०) इत्यृचः वामदेवः ऋषिः। साम्नो (!) पूर्वमृचः तस्य ऋगेव ऋषिः। उत्तरं साम्नः साम। तस्य सामैव ऋषिः। 5 ामनी देवते (ग्रा. गे. ६२६-७) ॥ ३६९ ॥

॥ इत्यष्टादशानुष्टुभ्यः ऋचः ॥

॥ इत्यैन्द्रे चतुर्थेऽध्याये द्वितीयः खण्डः ॥ २ ॥

## ॥ तृतीयः खण्डः ॥

अथ जगत्यः एकादशर्चः। आद्या अतिजगतीति केचित् ॥ 10

विश्वाः पृतना (१) इत्यृचः रेभः काश्यपः ऋषिः। साम्नस्त्रैशोकस्य ोकः ऋषिः ॥ (ग्रा. गे. ६२८) ॥ ३७० ॥

श्रत्ते दधामि (२) इत्यृचः सुवेदाः शैलूषी ऋषिः। साम्नामष्टाना- द्वे शैखण्डिने। तयोः शिखण्डी ऋषिः। तृतीयचतुर्थौ अत्रेर्विवर्तौ। त्रिः ऋषिः। पञ्चमषष्ठे महासावेतसे। तयोश्चात्रिः ऋषिः। सप्तमाष्टमे 15 शैरीषे। तयोर्महान् शिरीषः ऋषिः ॥ (ग्रा. गे. ६२९-३६) ॥ १ ॥

समेत विश्व ओजसा (३) इत्यृचः वामदेवो गौतमः ऋषिः। साम्ना- द्रस्य प्रियाणां त्रयाणाम् इन्द्रः ऋषिः। वसिष्ठो वा ॥ (ग्रा. गे. ६३९) ३७२ ॥ 20

---

I. My LB. स्थानाम् for स्थन
3. My LB. देवामवा See CN.
13. MyLB. सुर्वेदाः for सुवेदाः ; My शेष्टयषी, B. शेष्ठूषी L. शेषूषी for शैलूषी.
15. Sm. सवेतसः for अत्रिः
18. My LB. सत्रेदाः शेपूरः for वामदेवो गौतमः See CN.

**इमे त इन्द्र ते** (४) इत्यृचः सव्य आङ्गिरसः ऋषिः। साम्ना[illegible] वसिष्ठस्य वा वैरूपाणां त्रयाणम् इन्द्रः वसिष्ठो वा ऋषिः ॥ ([illegible] ६४०-२) ॥ ३७३ ॥

**चर्षणीधृतं मघवानम्** (५) इत्यृचः विश्वामित्रः [ऋषिः।] 5 बार्हदुक्थस्य बृहदुक्थः ऋषिः ॥ (ग्रा. गे. ६४३) ॥ ३७४ ॥

**अच्छा व इन्द्रं मतयः** (६) इत्यृचः कृष्णः ऋषिः। साम्न[illegible] त्रासदस्यवयोः त्रसदस्युः ऋषिः ॥ (ग्रा. गे. ६४४-५) ॥ ३७५ ॥

**अभि त्यं मेषम्** (७) इत्यृचः सव्यः ऋषिः। साम्नः जागतंसो[illegible] साम्नः सोमः ऋषिः ॥ (ग्रा. गे. ६४६) ॥ ३७६ ॥

10 **त्यं सु मेषं महया स्वर्विदम्** (८) इत्यृचः सव्यः ऋषिः। साम्नः सौभरस्य सुभरिः ऋषिः ॥ (ग्रा. गे. ६४७) ॥ ३७७ ॥

**घृतवती भुवनानाम्** (९) इत्यृचः भरद्वाजः ऋषिः। द्यावापृथिव्यौ देवते। साम्नोर्वरुणस्य साम्नोर्वरुणः ऋषिः ॥ (ग्रा. गे. ६४८-९) ॥ ३७८ ॥

**उभे यदिन्द्र रोदसी** (१०) इत्यृचः मरुतो यौवनाश्वः ऋषिः। 15 इयमष्टाक्षरपदा महापङ्क्तिछन्दस्का। साम्नः श्येनस्य इन्द्रः ऋषिः ॥ (ग्रा. गे. ६५०) ॥ ३७९ ॥

**प्र मन्दिने पितुमदर्चता वचः** (११) इत्यृचः कुत्स ऋषिः। एषा गर्भस्राविणी उपनिषत्। साम्नः च्यावनस्य च्यवनः ऋषिः ॥ (ग्रा. गे. ६५१) ॥ ३८० ॥

20 ॥ इति जगत्यः ॥

॥ इत्यैन्द्रे तृतीयेऽध्याये तृतीयः खण्डः ॥

---

6. My BL: साम्नश्छत्रास° for साम्नोश्च त्रास° ;
7. My LB. छत्रास for त्रस°.
15. My. श्यैन्यस्य for श्येनस्य
23. L: after ऋषिः। adds गर्भस्राव:

## ॥ चतुर्थः खण्डः ॥

## अथ इन्द्रपुच्छम्

अष्टाविंशतिरिन्द्रेति मुख्याः सप्तदशोष्णिहः ।
दशान्याः ककुभो मध्ये पिबेति त्रिपदां विराट् ॥ १ ॥
तुचे तुनायापामीवामादित्यानां तु संस्तवः । 5
आ गन्ता [गा]वो मारुत्यो वैन्द्रया एवापरा ऋचः ॥ २ ॥

इन्द्र सुतेषु (१) इत्यृचः नारदः ऋषिः । साम्नां त्रयाणाम् आद्यं ...शम् । द्वितीयमनुक्रोशम् । तृतीयं कौत्सम् । संक्रोशानुक्रोशयोः इन्द्रः ...षिः । कौत्सस्य कुत्सः ऋषिः ॥ (ग्रा. गे. ६५२-४) ॥ ३८१ ॥

तमु अभि प्र गायत (२) इत्यृचः तं ते मदम् (३) इत्यृचश्च 10 ...सूक्ति-अश्वसूक्तिनावृषी । तमु आभीति साम्नां चतुर्णाम् आद्ये दैवोदासे । ...र्दिवोदासः ऋषिः । प्रहितोः संयोजने द्वे । ओकोनिधनं पूर्वम् । प्रहितिः ...षिः । तं ते मदमिति साम्नां चतुर्णां हारिवर्णानां हरिवर्णः आङ्गिरसः ...षिः ॥ (ग्रा. गे. ६५५-६२) ॥ ३८१-३ ॥

यत् सोममिन्द्र (४) इत्यृचः पर्वतः ऋषिः । साम्नां चतुर्णां त्रैतानां 15 ...त ऋषिः ॥ (ग्रा. गे. ६६३-६) ३८४ ॥

[एदुम]धोर्मदिन्तरम् (५) इत्यृचः विश्वमनाः वैयश्वः ऋषिः । ...म्नो[: सुराधसप्राधसयोः] सुराध[स] प्राध[स]ावाङ्गिरसावृषी ॥ (ग्रा. गे. ६६७-८) ॥ ३८५ ॥

एन्दुमिन्द्राय सिञ्चत (६) इत्यृचः विश्वमनाः वैयश्वः ऋषिः । 20 ...म्नो मारुतस्य मरुतः ऋषिः ॥ (ग्रा. गे. ६६९) ॥ ३८६ ॥

---

10. My B. तमूवभि L. तमु अभि for तमू अभि. See CN, My LB. after ऋचश्च add अस्य
15. MyLB. त्रेतानां सृतः for त्रैतानां त्रितः ।
21. My LB. सुराधप्राधावङ्गिरसा साङ्गिरसौ for सुराधस त्रितः साङ्गिरसौ

**एतो न्विन्द्रं स्तवाम** (७) इत्यृचः विश्वमनाः वैयश्वः ऋ
साम्नो वैश्वमनसस्य विश्वमनाः ऋषिः ॥ (ग्रा. गे. ६७०) ॥ ३८७

**इन्द्राय साम गायत** (८) इत्यृचः नृमेधः ऋषिः ।
सौमित्राणां त्रयाणां सुमित्रः ऋषिः ॥ (ग्रा. गे. ६७२-३) ॥ ३८८

5 **य एक इद्विदयते** (९) इत्यृचः गौतमः ऋषिः । साम्नां
त्रैककुभानां त्रिककुभः ऋषिः ॥ (ग्रा. गे. ६७४-६) ॥ ३८९ ॥

**सखाय आ शिषा[महे]** (१०) इत्यृचः विश्वमनाः ऋषिः
साम्नामौक्ष्णोरन्ध्राणाम् उक्ष्णोरन्ध्रः ऋषिः (ग्रा. गे. ६७७-९) ॥ ३९०

॥ इत्यैन्द्रे चतुर्थेऽध्याये औष्णिहश्चतुर्थः खण्डः ॥

10 ॥ **पञ्चमः खण्डः** ॥

**गृणे तदिन्द्र ते शवः** (१) इत्यृचः प्रगाथः ऋषिः । साम्नां त्रयाणाम् आद्यं प्रयस्वत् प्राजापत्यम् । द्वितीयम् आक्षारम् । तृतीयं [प्रयस्वत् ।] तेषां प्रजापतिः ऋषिः ॥ (ग्रा. गे. ६८०-२) ॥ ३९१ ॥

**यस्य त्यच्छम्[बरम्]** इत्यृचः (२) भरद्वाजः ऋषिः । साम्नां
15 चतुर्णां दैवोदासानां दिवोदासः ऋषिः ॥ (ग्रा. गे. ६८३-६) ॥ ३९२ ॥

**एन्द्र नो गधि** (३) इत्यृचः नृमेधः ऋषि । साम्नोः सांवर्तयोः इन्द्रः ऋषिः ॥ (ग्रा. गे. ६८७-८) ॥ ३९३ ॥

**य इन्द्र सोम** (४) इत्यृचः पर्वतः ऋषिः । साम्नः साम्न आक्षारस्य अक्षारः ऋषिः ॥ (ग्रा. गे. ६८९) ॥ ३९४ ॥

20 **तुचे तुनाय तत्सु नः** (५) इत्यृचः इरिमीढः ऋषिः । आदित्यौ देवता । साम्नः दीर्घायुष्यस्य प्रजापतिः ऋषिः ॥ (ग्रा. गे. ६९०) ॥ ३९५ ॥

